ज्ञातुमशक्यैः क्षौमप्रवालचन्दनागरुमुक्तारत्नसुवर्णादिभिर्निखिलवस्तुभिः समृद्धा विस्तृताश्च आपणवीथयः । विक्रयार्थं प्रत्येकं विभज्य स्थापितैः सूपविशेषैर्नानाधान्यविशेषैश्च समलङ्कृता आपणमार्गाः, भक्ष्यापूपविक्रेत्रीणां मधुविक्रयव्यापृतानां धीवराङ्गनानाम्, मत्स्यजीविनां, व्याधानाम, लवणविक्रेतॄणाम्, एलालवङ्गतक्कोल-कर्पूरताम्बूलादिव्यापारिणाम अजमांसव्यापारिणाम तैलविक्रयकर्तॄणां च निवासस्थलानि ।

ताम्रकांस्यभाजननिर्मातारः, दारुकर्मोपजीविनस्तक्षकाः, चैत्रिकाः, मृत्तिकया सालभञ्जिकाप्रतिमाकर्तारः, स्वर्णकाराः, रत्नपरीक्षकाः, तन्तुवायाः, चर्मकार्यनिरताश्चर्मकराः, सूचीकाराः, विचित्रविविधवस्तु-निर्माणदक्षाः, वीणावेणुभ्यां सप्तस्वरान्विताभ्यां सङ्गीतवैदुष्यं प्रदर्शयन्तो गानशास्त्रमर्यादाभिज्ञाः गायकशिखामणयः, हस्तकर्मनिष्णाताः, सेवावृत्तिनिरताश्चेत्येवं स्वस्वकुलक्रमागतविविधवृत्तिभिः जीविकां निर्वर्तयतां जनानामावासस्थलानि तत्र तत्र कल्पितान्यासन् ॥

## 3. राजधानी

पुकारभिधायां राजधान्यामेकत्र विपुला राजमार्गाः, पताकाशोभि-रथगमनमार्गाः, विपणिवीथ्यः, विश्रुतवणिक्प्रमुखभवनालङ्कृता रथ्याः, विप्रवराणाम्, सर्वलोकप्रियङ्कराणां कृषीवलानाम्, आयुर्वेदवैद्यानाम्, दैवज्ञानां च वासगृहाणि प्रत्येकं विभज्य स्थापितान्यदृश्यन्त । मुक्ताहारनिर्मातॄणाम्, विचित्रवलयविधायकानां विशाला वीथ्यः ।

सूतमागधवैतालिकानां, घटिकानिवेदकानां, समलङ्कृतानां वीथीनाटकाभिनेतृणां, कामकलाकुशलानां गणिकाङ्गनानां, नाट्यशास्त्रविशारदानां, कुसुमविक्रेतृणां, दास्योपजीविनां च वासगृहाण्यत्रासन् । नानावाद्येषु आसादित-पाण्डित्या विद्वांसः, भेरीपटहादिवादनकुशलाः, हास्यरसप्रधाना विदूषकाः, अश्वपालाः, गजपालाः, रथसारथयः, सेनापतयश्च भिन्नभिन्नस्थलेषु वसन्तो व्यराजन्त । राजभवनमभितः सुविहितानि वासार्हाणि स्थलानि निर्मितान्यवर्तन्त । विख्यातयशसां महा-पुरुषाणामावासभूतमिदं नगरं महाकविप्रशंसनीयमहिमोपेतं शुशुभे ॥

## 4. आपणवीथ्यां भूतबलिदानम्

एतादृशयोः नगरोपनगरभागयोः मध्यवर्तिभूभागः, युयुत्सया पार्श्वद्वयमागत्य स्थितयोर्जयैषिणोः पक्षप्रतिपक्षभूपालयोर्लक्ष्यभूता समरभूमिरिव कोलाहलोपेतोऽभवत् । तत्र निबिडप्ररूढपादपानां अधोभागरूपैः स्तम्भैः प्रकृत्यैव निर्मिता इव स्थिता आपणाः । क्रयविक्रयव्यापृतानां जनानां सम्मर्दोद्भूतकलकलध्वनिः सदा श्रूयते । आपणवीथ्यां नगराधिष्ठानदेवताया आलय एकः प्रतिष्ठितश्चकास्ति । तत्पुरतो बलिदानोपयोगाय स्थापितं बलिपीठं । जयशूलपाणे-र्मुचुकुन्दभूपालस्य पीडानिवृत्तिमभिकाङ्क्षता देवेन्द्रेण प्रेषिता देवाः भूतस्यास्य बलिदानार्थमद्याप्यत्रागच्छन्तो वर्तन्ते । तदानीं चैत्रमासः । चित्रानक्षत्रयुता पौर्णमासी । प्रातः कालः । वीरकुलाङ्गनाः पक्वचणकं तिलापूपः, मांसमिश्रितौदनम्, कुसुमानि अगरुधूपः,

मुद्गान्नम् इतीमानि बलिपीठे समर्पयन्त्यो बलिमयच्छन् । अन्योन्याबद्धहस्ता भूतप्रेरितास्ता ननृतुः । "अस्मद्देशाधिपेन परिपाल्यमानोऽयं देशो व्याधिदुर्भिक्षक्षुत्पिपासादिरहितः सर्वसम्पत्समृद्धश्च भवतात्" इत्याशासमानाः परिसमाप्तबलिकृत्याः सर्वालङ्कारशोभितास्ताः स्वस्वगेहं प्रति जग्मुः ॥

## 5. नरबलिः

नगरपरिसरप्रान्तवासिनो विक्रान्तयशसो वीराः नगरैकदेशवर्तिनो नानास्त्रप्रहरणाः शूराश्च परस्परं मिलिता महाबलिपीठमागत्य 'अस्माकमवनिपालो निरुपद्रवो जयतात्' इति वदन्त एव देवं ववन्दिरे । केचित् पक्षिताडनोपयुक्तरज्जुहस्ताः, अपरे शूलपाणयः, अन्ये आर्द्रमांसरूषितकृष्णचर्मालङ्कृतगात्राः स्वस्वभुजाभ्यां स्कन्धे ताडयन्तो हर्षध्वनिं चक्रुः । भयंकरैः अग्निं वमद्भिरिव स्थितैः क्रूरनेत्रैः समेता इमे पूर्वं बहुवारं समराङ्गणेषु प्रकटितप्रभावाः । "जयशीलोऽयं राजा वर्धतामनिशम्" इति कथयन्तः स्वेषां शिरांसि अवलीलयैव छित्त्वा बलिपीठे निक्षिप्य भूतेभ्य आत्मबलिदानमकुर्वन् । पटहध्वनिना अशनिध्वनिनिभेन निजगर्जितेन चोपेतं तद्भूतं अनुपदमाविर्भूय नरबलिमगृह्णात् ॥

## 6. मण्डपे बलिकर्म

द्रविडदेशे दक्षिणस्यां प्रतीच्यां वा दिशि स्थिताः सर्वेऽपि पार्थिवाः यतः पूर्वमेव करिकालचोलेन विजिता बभूवुः, अतः अत्र योद्धुं कमप्यपश्यन् युद्धप्रियः सः स्वीयभुजपराक्रमं प्रदर्शयितुकामः

उत्तरदेशे वा अवकाशो लभ्येतेति मन्वानः शुभेऽहनि खड्गभेरी-च्छत्रादिसमन्वितः पुण्यां कौबेरीं दिशं प्रति प्रस्थितः । अतीत्य गन्तुमिच्छतोऽपरिमितोत्साहवतो मम सङ्कल्पं विघटयन् विघ्नरूपोऽयं हिमाचलो द्वारमावृत्य तिष्ठतीति क्रोधाविष्टो देवानामावासभूतस्य हिमाद्रेरुपरि स्वीयं व्याघ्रचिह्नं प्रतिष्ठाप्य प्रतिनिवर्तितुकामः तथैव कृत्वा स्वनगरं प्रति प्रयाणमकरोत् । मध्येमार्गं जलधिमेखलामण्डितस्य वज्रदेशस्याधिपो मुक्तावितानम्, कृपाणयुद्धविशारदो मगधभूपालः पराजितो भूत्वा विद्यामण्डपम्, अवन्तिभूपो नानाचित्रविचित्रितं कवाटतोरणं च पारितोषिकत्वेनास्मै अयच्छन् । हेमरत्नमयानि इमानि त्रीण्यपि देवशिल्पिनो मयस्य मनसा निर्मितपूर्वाणि । पूर्वं कदाचिद्देवासुरयुद्धे देवानां साह्यमनुष्ठितवतां परोपकारपराणामेषां त्रयाणामपि राज्ञां प्रत्युपकारतया मयः स्वयं प्रीतः सन् इमान्ययच्छत् । करिकालचोळेनानीयात्र स्थापितानि तान्येवेमानि त्रीणि मिलितानि भूत्वा मण्डपतामयासिषुः । तदेव चित्रमण्डपनाम्नाद्य सर्वैर्निर्दिश्यते ॥

## 7. पञ्च स्थलविशेषाः

क्वचिन्महतां वस्तुभाण्डागाराणां विशालो द्वारदेशः । तत्र विदेशीयैः साकं क्रयविक्रयोपयुक्तनानावस्तूनि बध्वा बहिर्निक्षिप्तानि सन्ति । अपरिचिता विदेशीयाः केचित् विशिष्य स्वस्वभारपरिज्ञानार्थं तदुपरि स्वनामानि विलिख्य, स्वासाधारणमुद्राचिह्नितानकार्षुः । प्रायशस्तत्र चोराणामभावात् तद्रक्षणार्थमावरणादिकं न किञ्चिन्निर्मितम् । नापि पालकः कश्चित् तत्र नियुक्तः । यदि कश्चिद्बला-

चौर्ये प्रवर्तेत तदा तं भारं तच्छिरस्यारोप्य वीथीभ्रामणमेव तस्य दण्ड इति नियतिर्वर्तते । भारवहनभयान्मनसापि चौर्यकर्म तत्रत्या जना न स्मरन्ति ।

कुत्रचिद्रम्यमेकं सरः । कुब्जाः, वामनाः, मूकाः, बधिराः, कुष्ठरोगपीडिताश्चास्मिन् स्नानमात्रेण निर्दुष्टं यथावस्थितं रूपं लब्ध्वा तत्सरः प्रदक्षिणीकृत्य प्रणमन्ति ।

अन्यत्र विभ्राजमानैरुन्नतैः शिलास्तम्भैः निर्मित एको मण्डपः । वञ्चकपुरुषप्रयुक्तविषान्नभोजनेनोन्मत्ताः, बुद्धिपूर्वकं विषपानेन बाधिताः, विषाग्निमुद्गमतो भुजगस्य क्रूरदशनैर्दष्टाः, क्रूरपिशाचग्रस्ता इत्येते, अन्ये रुग्णाश्च दिव्यमण्डपस्यास्य सकृत्प्रदक्षिणप्रणामाभ्यां सकलरोगविनिर्मुक्ता विराजन्ते ।

"स्वाश्रमविरुद्धाचारशीलास्तपस्विनः, दुर्वृत्तपरा नार्यः, राजविद्रोहकराः सचिवाः, परदारपरायणा नराः, मृषासाक्ष्यवक्तारः, पैशुन्यवादिनश्च मत्करधृतपाशस्य वशा भविष्यन्ति" इति उच्चैर्बहुदूरगामिना ध्वनिना गर्जयित्वा तथाविधांस्तान् निहत्य च भक्षयता भूतेनाधिष्ठितश्चत्वरप्रदेशः एकत्रादृश्यत ॥

राज्ञि कदाचित् न्यायभ्रष्टेऽपि, न्यायसभायां न्यायाधिपैः क्रियमाणे निर्णये कदाचित् नीतिशास्त्रविरुद्धे सञ्जातेऽपि, वाचा राजानम् अदूषयित्वैव खेदाश्रुमोचनपूर्वकं रुदन्ती काचित्प्रतिमा

एकत्रातिष्ठत् । तत्त्वदर्शिभिः सत्पुरुषैः श्लाघनीयेषु एषु पञ्चस्वपि स्थलविशेषेषु नित्यं बलिपूजामाचरन्तो जना वर्तन्ते ॥

## 8. इन्द्रोत्सवारम्भः

कवचभूषितस्य वारणस्य स्कन्धे मन्दिरोपयुक्तं मङ्गलमुरज-वाद्यमारोप्य ऐरावतनाथस्य देवेन्द्रस्य आलये प्रवर्तिष्यमाणोत्सवा-रम्भवार्तां नगरवीथीषु सर्वतः व्याप्तामकुर्वन् । वर्षरूपेण भुवि आवि-र्भूय लोकोपकारमाचरतः शचीपतेर्देवालये व्योमव्यापिनीमुन्नतां पताकामलङ्कारभूतामबध्नन् ॥

## 9. नगरालङ्कारः

शातकुम्भमयी मरकतमणिखचिता बहिर्वितर्दिका । तस्यां चतुर्षु भागेषु प्रवालमयाः स्तम्भाः वेदिकामलङ्कुर्वन्तो विलसन्ति । एतादृशनानावेदिकोपेतैर्भवनैरुपशोभिताः नगरवीथयः । तासु च भवनद्वारस्थापितेषु स्वच्छमुक्तामणिविराजितेषु स्तम्भेषु मङ्गलतोरणानि लम्बमानानि लसन्ति । विशुद्धकनकमयपूर्णकुम्भान्, स्फुरदङ्कुर-पालिकाः, स्त्रीप्रतिमारूपप्रदीपान्, कनकपताकाः, स्वच्छश्वेतवाल-व्यजनानि, सुगन्धिचूर्णानि च करे दधानाः पट्टणरथ्यासु प्रजाः सज्जा अतिष्ठन् ॥

## 10. इन्द्राभिषेकः

पार्थिवाः, सचिवाः, सेनापतयः, विविधकर्मकुशलाः, वणिक्सून-वश्च हयान्, गजान्, शीघ्रगामितुरगैरुपेतान् रथांश्चाधिरुह्य स्थलविशेषे

सङ्गताः ख्यातविभवस्य देशाधिपस्य विजयमाशशंसिरे । सर्वलोक-वर्तिनो जीवराशीन् अष्टोत्तरसहस्रफणामण्डलैः आदिशेषवत् त्रिभ्रल्याः सलिलसमृद्धिमत्याः कावेरीनद्याः सङ्गममुखेभ्यः स्वर्णकुम्भैः पुण्यतीर्थ-मानयन्तो जनाः देवनाथमिन्द्रमभ्यषिञ्चन् । अत्याश्चर्यं दृश्यमिदं पश्यन्तो मर्त्याः भ्रान्ताः । अमर्त्यास्तु चकिता आसन् ॥

## 11. देवालयाः

अप्राकृतशरीरस्योमापतेः, रक्तकान्तिमतः सुन्दरमूर्तेः षडाननस्य, श्वेतशङ्खनिभस्य बलभद्रस्य, नीलमणिकान्तेर्महाविष्णोः, सितातपत्रमण्डितस्य मुक्तालङ्कारालङ्कृतस्य देवराजस्य च देवालयेषु वेदोक्तप्रकारेण होमादिकम्, तथा चतुर्विधदेवानाम् अष्टादश-भूतानां देवालयेषु पृथक् पृथक् महोत्सवश्च महता कोलाहलेन प्रावर्तत ॥

## 12. उत्सवकालिकदृश्यानि

उत्सवसमये जैनमठेषु, धर्मशालासु, प्राकारोपान्तस्थित-पुरःस्थलेषु च कोविदाः पण्डिता धर्मोपदेशमकुर्वन् ।

पताकाशोभिमहारथमास्थितवता चोलराजेन समं वैरं सम्पाद्य, तस्मात् कारागृहप्रवेशदण्डं प्राप्य खेदमनुभवन्तः शत्रुभूपालाः दयया बन्धान्मुमुचिरे ।

ननृतुर्नटवराः । वीणावेणुविशारदाः स्ववाद्यान्यवादयन् । गानशास्त्रकुशला मधुरमगायन् । अहर्निशं भेरीरवः शुश्रुवे । इत्थं नानादृश्योपेताः पट्टणवीथय उपवीथयश्चापरिमितां शोभामावहन् ॥

## 13. मलयानिलो वाति वीथ्याम्

गृहप्ररूढमल्लिकानीलोत्पलरक्तोत्पलप्रसूनभारभरितः, करिमदजलामोदवासितः, रम्यसुवासनावासितकुसुमवाटिकायां विहारमिच्छन्नमन्दानन्दप्रदायिन्यां विपणिवीथ्यां कुसुमापणं प्रविश्य, आमोदमाघ्राय, स्मितपूर्वाभिभाषिण्या रमण्याः कलभाषितश्रवणसञ्जातकुतूहलो गायकधूर्तजनैः समं पुरवीथ्यां यथेष्टं सञ्चरणशीलो माधवीसनाथः कोकिल इव मधुरं गायद्भिर्भ्रमरैर्वसन्तेन च समेतो मलयानिलः पुरमार्गेषु स्वेच्छया प्रविश्य सुखं ववौ ॥

## 14. सर्वाङ्गसुन्दर्यः

शिरसि नीलमेघान् मुखे निष्कलङ्कतां तत्पार्श्वद्वयेऽपि मीनाकृतिं च वहन् निशाकरः, 'सर्पग्रहणभयेन व्योम्नो भुवमवतीर्य वारस्त्रीमुखच्छद्मना किन्न्वत्र परिभ्रमती'ति रजन्यां नगरवीथीषु सञ्चरन्त्यः शशिवदना वाराङ्गनाः दृष्ट्वा, युवानः केचिदेवं सम्भावयामासुः ।

'शीतकिरणरूपायामवन्यामम‍ृतकलासमृद्धं शीकरोपेतं जलं पीत्वा पुनर्नष्टदेहप्राप्तिं कामयमानेन मदनेन संवर्धिता विद्युल्लता किन्वत्रागता' इति नगरनारीणां तनुमध्यभागं पश्यन्तः अपरे इत्थं शशङ्किरे ।

नगरे परिदृश्यमानामत्यधिकां श्रीसमृद्धिं तद्देशपालाय प्रत्यक्षं प्रदर्शयितुकामा कमलालया लक्ष्मीः पुरीमिमां प्रविवेश । स्वस्मिन् सम्भूतायास्तस्या मार्गणाय कपटवेषेण सरोजकुसुममेव किमत्र सञ्चरतीति पङ्कजवदनायाः कस्याश्चिन्मुखमालक्ष्य कामुकः कश्चित् संदिदेह ।

'प्राणभक्षणार्थं वदनं व्यावृत्य स्थितः कालो राजदण्डभयात् परित्यक्तपुरुषवेषोऽपि कर्मणा स्वाभाविकीं क्रूरतां परममुञ्चन् , सलज्जं समन्दहासं वीणानादमिव मृदुमधुरं भाषमाणः स्त्रीवेषधारी किमत्र सञ्चरती'ति नगरमार्गे प्रयान्तीं कामिनीमेकामालोक्य केचिदेवं मेनिरे ॥

## 15. भार्यानुनयः

अनङ्गसेनेव स्थिता वारनार्यः अपाङ्गैरेव पुरुषान् विजित्य पलायनपरायणांस्तान्निवर्त्य स्वदेहसम्बन्धेनालक्तकरसचित्रविचित्रित-कायांस्तानकार्षुः । तन्मुद्रामुद्रितकायानां स्वगृहमागतानां स्वभर्तॄणां देहस्थितानि परनारीदेहसम्बन्धसूचकचिह्नानि ज्ञात्वा पतिव्रतोत्तमाः कुलस्त्रियो भृशमुद्विग्ना बभूवुः । तासां नयनानि रक्तान्यासन् ।

गेहमागतानतिथीन् दृष्ट्वाप्यशान्तोऽयं कोपः केन वान्येनोपायेन शममेष्यति इति भर्तारः इतिकर्तव्यतामूढा भीतभीता बभूवुः । इत्थमुत्सवकाले नानाविधानि दृश्यानि तत्र प्रवृत्तानि ॥

## 16. नेत्रस्पन्दनम्

नीलोत्पलतुल्ये कण्णक्या नीललोचने विरहवेदनामन्तर्बहिश्च निगूहितुं यथा अश्रूण्यमुञ्चतां, तथा माधव्या रक्तान्तनयने आनन्दवार्यत्यजताम् । भाविशुभाशुभसूचनोपयोगितया कण्णक्या दक्षिणं, माधव्याः वामं च नयनमस्पन्देताम् ॥

## VI

# समुद्रस्नानगाथा

## 1. विद्याधरेण स्वभार्यायै पुकार्महिमवर्णनम्

रजतपर्वते मधुनिष्यन्दिप्रसूनमण्डिते कस्मिंश्चिदुद्याने मीनलोचन्या प्रियया सार्कं कामोत्सवमाचरन् कश्चित् विद्याधरवीरः प्रियां दृष्ट्वा एवमाह—"इतो दक्षिणस्यां दिशि स्थितायां पुकारभिधायां पुर्यां अयं इन्द्रोत्सवारम्भदिवसः । पुरा क्रूरैर्निशाचरैः इन्द्रलोके संक्रान्ते, शार्दूलविक्रमः पुरन्दरसखः मुचुकुन्दभूपालः तान् युद्धे विद्रावयामास । ततः कुपितेषु पिशिताशनेषु पुनः राजानं इषुभिः प्रतिघटयत्सु, तदा पुरन्दरेण प्रेरितं महाभूतं दानवान् निहत्य, पुकार्पुरापणवीथ्यां बलिं भक्षयत् अद्यापि प्रतिवसति । तत्र गम्यते चेत् तत्स्थलमस्माभिः द्रष्टुं शक्यम्" इति ।

तदा प्रीतेन मघवता अर्पिताः रम्यमहिमोपेताः निरवद्याः पञ्च पुण्यस्थलविशेषाः मुचुकुन्दपरम्परागतैः चोलभूपालैः पुकार्पुरमानीय स्थापिताः विलसन्ति । स्थलपञ्चकप्रभावोऽपि तत्र गताभ्यां आवाभ्यां द्रष्टुं शक्यः ।

पूर्वं कदाचित् देवलोके सहस्राक्षस्य पुरतः ऊर्वश्याः गीतानुगतं नाट्यं प्रवर्तमानमभूत् । तदा वीणावादनविशारदो

नारदमुनिः मधुरं वीणामवादयत् । नाट्याङ्गनाः नृत्यगानमगायन् । नाट्यमध्ये इन्द्रसूनुं जयन्तं दृष्ट्वा काममोहिता यदा अन्यमानसा भूत्वा शास्त्रक्रममुल्लङ्घ्य सा अनृत्यत् तदा तदनुसृत्य प्रवृत्ता नारदवीणापि गानशास्त्रक्रममत्यक्रामत् । देवेन्द्रदर्शनार्थमागतो भगवान् अगस्त्यमुनिः अत्याचारमिमं पश्यन् क्रोधाविष्टो भूत्वा "भुवि ते जन्म भविष्यति" इति ऊर्वशीं शशाप । लब्धशापा सा ऊर्वशी पुकापुरे गणिकाकुले माधवीछद्मना जज्ञे । तस्या एव परम्परायां सम्भूतेयं माधवी इन्द्रोत्सवसमये नर्तिष्यति । तदपि गत्वा पश्येव । हे शोणाधरे ! रक्तवदने ! ढक्कामध्यसममध्यसमन्विते ! प्रिये ! इत एहि । शचीपतिं सेवितुं तमेव देशं गच्छेव" इति ॥

## 2. तयोः पुकागमनम्

ततः प्रस्थितो विद्याधरवीरः नानाकूटशोभितं हिमाद्रिं, पयःसमृद्धां गङ्गानदीं, रम्यां उज्जयिनीम्, विपुलां विन्ध्याटवीं, वेङ्कटाद्रिं, सस्यसमृद्ध्युपेतं कावेरीतीरदेशं च मध्येमार्गं प्रियायै क्रमेण प्रदर्शयन् कुसुमवाटिकोपशोभितां तां पुरीमयासीत् । पुष्टपुराण-पुर्यां च तस्यां अमन्दानन्दप्रवाहेण प्रवर्तमानं पुरन्दरमहोत्सवं सभार्यः अपश्यत् ॥

## 3. माधव्याः एकादश नृत्यानि, ताभ्यां तद्दर्शनं च

"हे प्रिये ! विष्णुस्तोत्रात्मकं देवगानं, चतुर्विधवरुणभूतपरं देवगानं, निजकलाभिः जीवराशीन् पोषयतः खेचरस्य चन्द्रमसः

स्तुतिविषयकं देवगानं इतीमान्यादौ स्वयमेव कृत्वा ततः अवहितेन चित्तेन तालगतीः स्पष्टाः प्रदर्शयन्तीं नर्तनोद्यतां माधवीं पश्य ।

भैरवीनाट्यरङ्गस्थलायमानायां रुद्रभूम्यां त्रिपुरदाहकर्मणि देवैः प्रेरितः पार्वतीसमेतः परमशिवः अग्निमुखान् शरान् प्रयुज्य पुरं दग्ध्वा हस्तताडनपूर्वकं यदानन्दताण्डवमकरोत्, तदिदमभिनीय प्रदर्शयन्तीं इमां माधवीमीक्षस्व । रथाग्रभागवर्तिनः ब्रह्मणः पुरस्तात् भारतीवेषधारिणा भगवता कृतं पाण्डरङ्गाख्यं नर्तनमनुकुर्वतीमिमां पश्य । वञ्चककंसवञ्चनाय कुवलयापीडस्याग्रे तद्दन्तभञ्जनोद्यतेन अञ्जनाभेन कृष्णेन कृतं नाट्यमाश्रित्य नृत्यन्तीमेनामवलोकय ।

मल्लं बाणासुरं हतवता मायाविना आचरितं नृत्यं, मध्येसमुद्रं तरङ्गरूपरङ्गस्थल्यां स्वजिघांसया आगतस्य शूरभद्रस्य बलं नाशितवता षडाननेन ढक्कावादनपूर्वकं कृतं नृत्यविशेषं, समराङ्गणे योद्धुमशक्तानां नष्टायुधानां दानवानां पुरतः शूलं प्रसार्य कार्तिकेयेन प्रवर्तितं नाट्यं, बाणासुरपुरप्रधानवीथ्यां विपुलां पृथिवीमाक्रम्य मितवता मायाविना कृतं नृत्यं, स्वीयं वेषमाच्छाद्य गृहीतक्लीबवेषेण कामेनानुष्ठितं नृत्यम्, कुपितदानवकृतक्रूरकर्माणि सोढुमसहमानया तद्धननोद्यतया दुर्गादेव्या दारुपादमवलम्ब्य कृतं नाट्यम्, समरोन्मुखान् दानवान् निर्वासयन्त्या रक्ताभया लक्ष्मीदेव्या प्रवर्तितं मोहिनीनृत्यम्, बाणपुर्यां उत्तरगोपुरद्वारस्थितया कृषीवलकन्या-

वेषधारिण्या इन्द्राणीनाम्न्या कयाचिदनुष्ठितं कृषीवलनृत्यम् इतीमान्येकादशविधनृत्यान्यपि तत्तन्नाटयोचितभूमिकाभूषणमावादि-परिग्रहेण शास्त्रसम्प्रदायानुसारं गानविशेषपूर्वकं अभिनीय नृत्यन्त्याः माधव्याः वैदुष्यमवलोकय । "पूर्वमुद्यानवने यामधिकृत्याहमवोचं, सा माधवीकुलसम्भूता गणिकाङ्गना माधवी इयमेव" इति हस्तेन तां प्रदर्श्य स्वयमपि तन्नाट्यदर्शनसञ्जात-कुतूहलो विद्याधरो मुमुदे ॥

## 4. सर्वाभरणभूषिता माधवी

इन्द्रोत्सवसम्बन्धिनोऽलङ्कारान् तदात्वे प्रवर्तमानान् भावरसांश्च द्रष्टुकामाः देवादयोऽपि प्रच्छन्नवेषाः समागम्य तद्दर्शनसुखमन्वभूवन् । शान्तः कोलाहलः । चिरविरहखिन्नमानसं कोवलं प्रीणयितुकामा माधवी सर्वाभरणैरात्मानमलङ्कर्तुमारभत । दशविधतिक्तरसद्रव्यैः, दशविधसुगन्धिलताभिः एलालवङ्गतक्कोलादिद्वात्रिंशत्परिमलद्रव्यैश्च मिलितेन जलेन मङ्गलस्नानं विधाय श्यामकुन्तलं प्रक्षाल्य, अगरुधूपेन तं शोषयित्वा पञ्चधा विभक्तं तं कस्तूरिकासंस्कारसंस्कृतं चाकरोत् । रक्तकोमलपदयोः अलक्तकरसं, अङ्गुल्यामङ्गुलीयकं च धृतवती ।

नूपुरकिङ्किणीप्रमुखान् पादयोः, कोमलवर्तुलोरुभागयोः नव्यमाभरणं, कटिधृतदुकूले मेखलास्थाने पृथुमुक्ताफलग्रथितां स्रजं, मुक्ताहारं विशुद्धमुक्तामणिमयमङ्गदं च भुजयोः, माणिक्य-

मणिखचितचित्रविचित्रितकटकं अच्छस्वर्णनवमणिशङ्खप्रवालमयान् वलयांश्च मृदुरोमाञ्चितकरयोः धृत्वा आत्मानमलङ्कृतवती सा। विवृतमीनवदनाकारमङ्गुलीयकं, ज्वलद्रक्तमाणिक्यमयमङ्गुलीयकं, मरकतमणिखचिता ऊर्मिकाश्च माधव्याः कार्तिककुसुमपेशलासु अङ्गुलीषु लब्धस्थाना व्यराजन्त। मुक्ताहारवीरशृङ्खलाद्यनेकाभरणैः तस्याः कमनीयकण्ठभागः परिष्कृतः प्राकाशत। कण्ठगतानामेतेषामाभरणानां भरेण कण्ठपश्चाद्भागोऽदृश्यो बभूव।

रत्नानुविद्धनीलमणिमयचन्द्रपाणिनामकं भूषणं कर्णविवरयोः, ललाटोत्तमाङ्गार्हभूषणनिवहग्रथितशिरोभूषणविशेषं दीर्घश्यामकुन्तले च दधाना, सर्वाभरणभूषिता माधवी संयोगवियोगाभ्यां पर्यायेण कोवलं तोषयन्ती आत्मनः कृते ब्रह्मणः नूत्ननिर्माणमिव स्थितं शयनमभजत।

## 5. समुद्रतीरगमनम्

इन्द्रोत्सवः महता कोलाहलेन प्रावर्तत। चन्द्रः परिपूर्णः प्रकाशते। समुद्रस्नानमभिलषन्तो जनाः त्वरितं जलधिं प्रति गच्छन्तः सन्ति। फुल्लप्रसूनशोभितं समुद्रोपवनमाश्रित्य जलक्रीडादृश्यमवेक्षितुकामा माधवी कोवलं गमनाय अनुमतिं प्रार्थयामास। तटाकेषु सरोजवासिनो द्विजाः उच्चैरकूजन्। कूजन्तः कुक्कुटाः प्रभातवेलामासन्नां न्यवेदयन्। चन्द्रप्रभया अन्धकारः क्रमेणापययौ। भूषणभूषिता माधवी स्रग्विणा कोवलेन सह पयोधिं गन्तुं

सज्जाऽभूत् । वृष्टिरिव दानशीलपाणिः कोवलः प्रयाणोन्मुखस्तुरग-मारुरोह । कुरङ्गेक्षणा माधवी च अवकुण्ठितं शकटमारोहत् ।

पौरास्तु अनेककोटिसम्भारसम्भृतवस्तुभाण्डागारवतीः क्षुद्र-वीथीः, कुसुममण्डितान् भासमानान् रत्नदीपानारोप्य दूर्वाकुसुमाक्षतान् परितो विकीर्य सभूषारवं सञ्चरन्तीभिः सुमङ्गलीभिः व्याप्ताः नित्यश्रीसमृद्धाः महावीथीश्चातीत्य वाणिज्येन विदेशेष्वपि लब्धप्रतिष्ठं नगरमार्गमध्यमागच्छन् । ततः श्वेतवालुकोपेतायां वाणिज्यार्थमागतानां विदेशीयानामावासभूतायां समुद्रमुखद्वारवर्तिन्यां आपणवीथ्यां धान्यविशेषपरिज्ञानोपयुक्ताभिः नानाधान्यनामाङ्कितपताकाभिः समेतान् अभितः प्रसृतान् धान्यराशीन् पश्यन्त एव ते जनाः उदधिकूलमासेदुः ॥

## 6. प्रभाते समुद्रतीरदृश्यम्

तत्र वर्णाङ्गरागतिलकप्रसूनामोदचूर्णभक्ष्यादिविक्रयस्थलेषु स्थापिताः दीपाः, कर्मागारेषु कार्मिकैः प्रतिष्ठिताः दीपाः, मोदकापणेष्वारोपिता दीपाः, अपूपविक्रेतृभिः दण्डाग्रेषु प्रज्वालिता दीपाः, मधुविक्रयकारिणीभिः स्वापणेष्वारोपिता दीपाः, मध्ये मध्ये मत्स्यव्यापारिभिः विपण्यां प्रतिष्ठापिता दीपाः, जलधिमार्गेण गच्छतामुडुपानां मार्गप्रदर्शनाय समुद्रतीरेष्वारोपिता दीपाः, नौकया समुद्रे चरद्भिः मत्स्यग्रहणोद्यतैः जालहस्तैः धीवरैः नौकामध्ये स्थापिता दीपाः, भिन्नभिन्नदेशभाषाभाषिभिः विदेशीयैः

नेक्षिप्ताः निशादीपाः, महाभाण्डागारद्वारपालकानां हस्तगता दीपाश्च असंख्येयाः परितोऽदृश्यन्त । एकत्र मिलितानां तेषाममितोज्ज्वलकान्त्या तत्क्षुद्रवालुकाप्रदेशे पतितः सितसूक्ष्मश्वेतसर्षपोऽपि पृथक्कृत्योद्धर्तुं शक्य आसीत् । विकसितपद्मपरिवृतसलिलस्थलशोभिन्यां केतकीपरिवृतायां समुद्रोपवनभूम्यां कुसुमलतेव भासमाना माधवी विहरणशीलाभिः सखीभिः समेता क्रीडितुमैच्छत् ॥

## 7. मुदिताः प्रजाः

गमनागमनोद्यताभिः नौकाभिः समृद्धस्य मकरालयस्य रम्यः तीरप्रदेशः । तत्रैकमुपवनम् । पर्वतसम्भूतानि पयोधिसम्भूतानि च नानावस्तूनि राशीभूय निक्षिप्तानि सन्ति अतीव शोभावहान्यासन् । सान्तःपुरा राजकुमाराः, सभार्याः वणिजः, नृत्याङ्गनाः, सङ्गीतविदुष्यश्च तत्रागत्य तिरस्कारिणीभिः संविभक्तेषु भिन्नभिन्नस्थलविशेषेषु वासं चक्रिरे । पुरा स्वर्लोकप्रथितयशसा करिकालचोलेन प्रवर्तितोत्सववेलायां व्रतभुवमासादितवद्भिः नानावेषभाषोपेतैः समा इमे व्यराजन्त । कावेरीसमुद्रसङ्गमप्रदेशे समवेतानां चतुर्विधवर्णसम्बन्धिनां जनानां सम्मर्दोत्थितकोलाहलध्वनिः तत्र महानभूत् ॥

## 8. वसन्तमालिका

जलधिगतपूतिगन्धमपि निजामोदेन निवारयद्भिः फुल्लकेतकीदलैः शोभिता वृक्षाः परितः मालारूपेण प्ररूढाः सन्ति । तन्मध्ये एकः पुन्नागपादपः । तस्याधश्छायायां विशुद्धो वालुकाप्रदेशः ।

समन्तात् विविधवस्त्रावरणानि । उपरिष्टात् एकं वितानम् । तत्र गजदन्तपादसनाथायां खट्वायां विषण्णमुखी भूत्वा वसन्तमाला नाम्नी चेटी काचित् वीणाहस्ता तिष्ठन्ती अवर्तत । कुसुमायतनयना माधवी चेटीकरगतां वीणां स्वयमेव गृहीत्वा कोवलमुपागमत् । तदा स्वच्छदीप्तिमतः चण्डकिरणस्य रथः प्राच्यां दिशि आविरासीत् । तेन समुद्रतीरकेतकीप्रसूनगताः निशि सुप्तोत्थिताः नीलषट्पदाः मकरन्दं पातुमुद्युक्ताः ॥

# VII

# समुद्रतीरगानम्

## 1. माधवी कोवलाय वीणां ददौ

विविधचित्रविचित्रवस्त्रभस्त्रिकानिहितां प्रसूनालङ्कृतमध्यभागां अञ्जनाञ्चितनयनया विवाहमङ्गलोपेतया सुपरिष्कृतया परिणयवध्वा समं विराजमानां यथाशास्त्रसम्पादितैः आणिदण्डतन्त्र्याद्यवयवैरुपेतां तां वीणां प्रणम्य हस्तेन माधवी जग्राह ।

गृहीत्वा च तत्र आरोहणावरोहणालापनाद्यष्टप्रकारैः नादमुदपादयत् । मरकतमणिमयोर्मिकाभिः विभूषिताः अङ्गुलीः तन्त्रीषु सञ्चार्य गानशास्त्रोक्ताभिः अष्टविधाभिः अङ्गुष्ठमध्यमाद्यङ्गुलिप्रयोगप्रक्रियाभिः गीतमुत्पाद्य परीक्ष्य च स्वयमादौ शुश्राव ।

एवं वादनोपयुक्तनानासंस्कारसंस्कृतां सज्जां तां वीणां कोवलकरे दत्वा, उपयोक्ष्यमाणतालविशेषं च तस्मै साऽब्रवीत् । गृहीतवीणः स कोवलः तां तोषयितुकामः कावेरीसमुद्रतीरपुकारपत्तनादीन्यन्यानि च विषयीकृत्य क्रमेण तयैव वीणया बहुधा गातुमारभत ॥ (1)

## 2. कावेरीविषयकगानम्

मीनलोचने ! हे कावेरि ! स्रग्वी, पूर्णचन्द्रनिभः, श्वेतातपत्रमण्डितस्ते पतिः चोलभूपालः उत्तरस्यां दिशि गङ्गानदीपर्यन्तां भुवं पालयन् गङ्गामप्युपयेमे । तथापि त्वं प्रियभर्तुः न जुगुप्ससे । प्रियानुरक्ताः पतिव्रताः पराङ्गनासक्तं निजभर्तारं दृष्ट्वापि पातिव्रत्यगुणेन क्षमन्त इत्येतद्रहस्यं जानेऽहमिदानीम् । तस्मात् जय कावेरि ! जयतु ते पातिव्रत्यम् । (2)

हे कवेरतनये ! विख्यातकीर्तिमालाधारिणः श्वेतातपत्रसनाथस्य दक्षिणस्यां दिशि कुमरिनदीपर्यन्तां भुवं पालयतस्ते भर्तुः चोलपार्थिवस्य कुमरिनदीसङ्गं दृष्ट्वाऽपि त्वं न कुप्यसि । महताऽप्रमेयेन पातिव्रत्यगुणेनैव स्त्रीणां तथाविधसहनशक्तिरभूत् इत्येतदहं अद्यैव वेद्मि । हे मीनाक्षि ! एवम्भूते हे कावेरि ! वर्धस्व, पुनर्वर्धस्व । (3)

एकत्र कृषिकर्मव्यापृतानां कृषीवलानां कोलाहलध्वनिः । अन्यत्र तटाकजलनिर्गममार्गादुत्थितो रम्यरवः । अपरत्र कूलं भित्वा निर्गच्छतः प्रवाहादुत्पन्नो निनादः । नवजलागमसमये उत्सवमाचरतां जनानामानन्दध्वनिः । सर्वमिदं पश्यन्ती गभीरां गतिमवलम्ब्य महता घोषेण सानन्दं च प्रवहन्ती यत् त्वमागच्छसि, तदागमनं हुङ्कारमात्रेणारिनिषूदनक्षमैः भटैरुपेतस्य ते भर्तुः राज्ञः स्थितामन्यादृशीं निरुपमां सस्यसमृद्धिमेव सूचयति ॥ (4)

## 3. पुकारविषयकगानम्

वरुणदेवतां साक्षीकृत्य नीलोत्पलनयनां अस्मत्प्रियसखीं नायिकामेनां कपटवाक्यैः प्रसन्नामकरोः । प्रभो! तत्सर्वमिदानीं वृथैवासीत् । भवतामसत्यकथनचातुर्यं मुग्धानामस्माकं एतावत्पर्यन्तमविदितमेवासीत् । एवं नायकस्य मृषोक्तिं तथ्यां मत्वा मुखविकासं प्राप्तवत्याः नायिकाया वदनमिव, श्वेतशङ्खमुक्ताफलानि दृष्ट्वा सतारो निशाकर एवोदयं प्राप्त इति भ्रान्त्या अकाले विकसद्भिः कुमुदैरुपशोभितं चकास्त्यस्मदीयं पुकारनगरम् ॥ (5)

कदाचित् कामपरवशः उपायनहस्तः समुद्रतीरोपवने अस्माननुसृत्य अस्मदयां योऽयाचत स एवाद्य परनारीपरायणो भूत्वा प्रार्थितोऽप्यस्माभिरपरिचित इवास्ते । प्रभो! अस्य स्वभावमजानत्यो वयं वञ्चिताः स्मः । इत्थं नारीष्वनेकासु स्थितासु का वा उपादेयेति अनिश्चिन्वन् नायकः कश्चित् यथा इतस्ततः परिभ्रमति तथा नारीमुखगतनेत्राणां चन्द्रिकाधवलविकसज्जलेरुहनीलकुसुमानां च भेदापरिज्ञानेन तात्त्विककुसुमं इदमिति निर्णेतुमशक्तैः, अत एव उभयत्र भ्रमद्भिः मधुपिपासुभिः भ्रमरैः समेतं किलास्माकं पुकारपुरम् । (6)

जलधितटे कन्यकाः काश्चन विहारार्थं सैकतगृहाण्यबध्नन् । तरङ्गवेगाहताः दक्षिणावर्तशङ्खाः क्वणन्त एव तीराभिमुखमागत्य वालुकागेहैरभिहन्यमानाः तान्यनाशयन् । ततः कुपितास्ताः रम्य-

निजाङ्गुलीभिः शिरोधृतां मालामाकृष्य शङ्खोपरि प्राक्षिपन् । तदा निस्सृतानि कतिचन नीलोत्पलप्रसूनानि भुवि समन्तात् शीर्णान्यलक्ष्यन्त । सायङ्काले गच्छतो जनान् स्वकटाक्षवीक्षणैः अनुगृह्णन्तीव स्थितानि भुवंगतानि तानि नीलोत्पलकुसुमानि वीक्षमाणाः पथिकाः 'किन्नु खल्विमानि नेत्राणि ?' इति भ्रान्ताः ततो गन्तुमसमर्था अभूवन् । प्रभो! एवंविधप्रकृतिलावण्योपेतं विराजतेऽस्मदीयं पुकार्पत्तनम् ॥ (7)

4. गानविशेषः

(विरहिण्या नायिकायाः स्थितिं रहसि नायकाय निवेदयति सखा— )

शङ्खानां सञ्चारेण समुद्रतीरसिकतासु रेखाचिह्नान्यजायन्त । तत्र प्ररूढाः पुन्नागपादपाः स्वीयकुसुमभारं तेषु निक्षिप्य मकरन्दरेणुभिः तानि चिह्नान्याच्छादयामासुः । एवमेव चन्द्रबिम्ब-वदनाया नायिकायाः मीनलोचनाभ्यां त्वय्युत्पादितं औषधान्तरा-चिकित्स्यं कामरोगं तस्या विपुलपयोधरावेव आच्छादयितुं शक्नुतः ॥ (8)

5. "न जाने"

(सुन्दरीमेकां दृष्टवतः कामुकस्य वचनम्—)

"शोषणार्थं आर्द्रमांसानि जलधितटे आतपे आस्तीर्णानि वर्तन्ते । मांसभक्षणाय खगाः परित उत्प्लुत्य तदुपरि पतन्ति ।

तन्निरसनव्याजेन काचिदङ्गना तत्रागत्य तिष्ठति । तस्याः करे भ्रमरपरिवृतं मल्लिकाकुसमं चकास्ति । सुरभिकुसुमसमन्विते जलधिकूलोपवने क्रूरदेवता काचित्तिष्ठतीति न मे विदितमासीत् । विदितं चेत् नैवाहमागतवान् स्याम्" इति तां समीक्ष्य कामुको ब्रूते ॥ (9)

"उदधिकूले मत्स्यजालोपजीविनां धीवराणां गृहाणि । तद्द्वारदेशेषु आतपशोषणार्थमार्द्रजालानि विक्रयोपयोगिमत्स्यमांसानि च प्रसारितानि दृश्यन्ते । करधृतकुसुमशाखा काचिद्वनिता मांसरक्षणोद्यता वर्तते । नेयं रमणी, अपि तु कामरूपपरिग्रहपटुः, शूलायतक्रूरनेत्रः अपरः कश्चिदन्तक एव शीतोदधितीरे अङ्गनाकृतिः छन्नः प्रतिवसति । तत्त्वमिदमजानतैव मयाऽत्रागतम् । पूर्वमेव ज्ञातं चेत् अत्रागमनस्य प्रसक्तिरेव न स्यात्" इति तां समीक्ष्य नायको वक्ति ॥ (10)

## 6. "किमेतत्"

(एकान्ते पुरत आयान्तीं नायिकां दृष्टवतो नायकस्य वाक्यम्—)

नयनरूपं मीनम्, भ्रूरूपं चापम्, नीलकुन्तलात्मकं मेघम्, तथा कामिजनहृदयविदारकं क्रूरकर्म च एकत्र विलिख्य निष्पादितं निर्दुष्टमस्या वदनं साक्षात् चन्द्र एव । सोऽयं मुखचन्द्रः राहुग्रहणभयात् त्यक्ताकाशवासः मीनैरुडुभैश्च जीवतां दाशानां क्षुद्रग्राममिममासाद्य गूढः वासं करोति । तदेतत् सर्वथा सत्यम् । भवन्त एव पश्यन्तु ॥ (11)

शब्दश्रवणजनितया भीत्या इतस्ततः सञ्चरती शूलनिशिते रक्ते तरलनयने दधानेयं रमणी साक्षान्मृत्युस्वरूपिणी । समुद्रसञ्चार-कृत्यैः जीवनं कुर्वतां कैवर्तानां क्षुद्रग्राममिमं प्राप्य वनितारूपेण सैव वसति मृत्युदेवता । ध्रुवमेतत् । भवद्भिरेव दृश्यतामिदम् ; पुनः पुनर्दृश्यताम् ॥ (12)

दुर्गन्धिशुष्कमत्स्यमांसाशनव्यग्रान् विहगान् विद्रावयन्ती, चित्तक्षोभकारिणा मदनरोगेण प्रेक्षकान् खेदयन्ती चेयं किन्तु क्रूर-देवता स्यात् ? निरीक्ष्यतां भवद्भिः । सैव प्रसूनमण्डिते शीतपयोधिकूले पञ्चवेणीधरा अङ्गनारूपधारिण्यास्ते इति मे भाति । समीक्ष्यतां सम्यक् भवद्भिरपि । (13)

7. "खेदावहानि"

(नायकः स्वप्रियसुहृदे विरहवेदनां विवृणोति—)

हे सखे ! उद्यानसुरभिकुसुमानि, तद्वासनावासितरम्यवालुकाः, तत्र वसन्त्याः अङ्गनायाः अव्याहतं मधुरवचनं, तस्याः यौवनपीनौ कमनीयौ च पयोधरौ, शशिवदनं, नतभ्रूचापौ, आलेख्यार्पितविद्युता तुल्यो मध्यभागः इत्यमून्येव मां व्यथयन्ति । (14)

हे सखे ! कल्लोलभरितो जलाशयः । कमनीयो वालुका-प्रदेशः । परिमलपूर्णं कुसुमम् । निबिडपादपोपशोभि काननम् । कुटिलामोदकुन्तलः । चारुचन्द्रवदनम् । मीनलोचने इत्येतेषु एकैकमपि मे खेदावहं भवति । (15)

हे सखे! महाशङ्खशोभि तीरतलम् । तत्र परिमलमेदुर-मुद्यानवनम् । प्रफुल्लामोदकुसुमानि । तस्याः विहारक्षममेकान्त-स्थलम् । नूतनप्ररूढ ङ्कुरा इव स्थिताः तस्याः श्वेतदन्ताः । पूर्ण-चन्द्रवदनम् । यौवनदशां प्राप्तवत्या अस्याः अन्योन्यपिनद्धौ वक्षोजौ, इत्येभिः भृशं विषण्णोऽहमभवम् ॥ (16)

## 8. "भग्नमध्या मा भूः"

(अलब्धप्रियासङ्गमो नायकः स्वीयामसह्यवेदनां प्रकाशयति—)

पयोधिमाविश्य, निहत्य च जन्तुगणान्, तेन जीवनं कुर्वतां धीवराणां कुले सम्भूता त्वमपि मद्देहमाविश्य मत्प्राणान् हत्वा किन्नु जीविष्यसि! कञ्चुकं भित्वा बहिर्निर्गतौ ते वक्षोजौ नितरां भारभूतौ स्तः । कुचभारं तं वोढुमशक्तस्ते मध्यभागः नूनं भज्येत । अतः तं भारं मद्भुजयोर्निधाय विनाशोन्मुखं ते मध्यभागं रक्षितुं यतस्व । (17)

नेत्रतुल्यरन्ध्रवद्भिः जालैः प्राणिवर्गान् विनाश्य तेन जीवति ते पिता । त्वमपि कुलक्रमागतवृत्तिमनतिक्रम्य निशित-नयनसमाख्यजालेन मत्प्राणान् पीत्वा उदरं पूरयसि । मुक्ताहार-शोभितयोः पृथुलकुचयोः महान्तं भारं वोढुमसहमानः भग्नः पतन्निव स्थितः मेघमध्यवर्तिविद्युदिवातितरलः दुर्बलश्च ते मध्यभागः यत्नेन रक्ष्यतां त्वया । (18)

पयोधौ नौकासञ्चारेण प्राणिनो निघ्नतां ते पूर्वपुरुषाणां पन्थानमनुसृत्य निजभ्रूभ्यां मत्प्राणान् निघ्नती त्वं कुलधर्मपरायणा विराजसे । स्वीयमहिमानं, परैरनुभूयमानवेदनां च त्वं सर्वथा न स्मरसि । कुचभारवहनेन ते मध्यदेशः म्लानमृदुसूक्ष्मो दृश्यते । तद्रक्षणे सावधाना भव । नो चेत् भग्नमध्यमा भविष्यसि ॥ (19)

9. "क्रूरचक्षुषी"

(नायिकामनुभूय तां मनसि चिन्तयतो नायकस्य भाषणम् —)

प्रवालमयमुसलहस्ता, सितमुक्तामणीन् उलूखले कृत्वा या अवहन्ति तस्या रक्तनयने कुमुदकुसुमे इति न मन्तव्ये । कठोरादपि कठोरे किल ते विभावयेऽहम । (20)

पुन्नागतरुच्छायायां मत्स्यगन्धितरङ्गेषु हंसमपि रम्यगमनमध्यापयन्त्या इव मन्दं मन्दं प्रयान्त्याः अस्याः अरुणनयने वस्तुतो नयने इति न मन्तव्यं भवद्भिः । नेत्रच्छद्मना काल एवात्र सन्निहित इति विभाव्यताम् । (21)

मधुमण्डितं नीलकुसुमं करे कृत्वा मांसशोषणस्थले तद्रक्षणार्थमुत्पततः खगान् विद्रावयन्त्या अस्याः रक्तवीक्षणे तीक्ष्णादपि अतितीक्ष्णे हि लक्ष्येते । (22)

हे हंस! गत्या त्वामभ्यतिशेते इयमङ्गना । वृथैव एनामनुसृत्य मा याहि । कल्लोलपयोधिमेखलामवनिमखिलामटित्वा सर्वाः विजित्य

प्रयान्तीं मन्दगमनोपेतां एनामनुसृत्य तव किन्नु फलं भविष्यति ?
माऽनुयाहि गतिमस्याः । मा गच्छ तस्याः पृष्ठे ॥ (23)

## 10. "अन्यथाग्रहणमनर्थाय भवति"

कुरङ्गायतेक्षणा सा माधवी एतावता प्रवृत्तं समुद्रतीरपरं कोवलस्य गानमखिलं यथावत् शुश्राव ।

"मया सह क्रीडन्नेवायं अन्यां कांचिन्मनसि कृत्वा तस्यां मुग्धो वर्तत इत्येतत् अन्यापदेशपरैरेतदीयैः एभिः गीतैरेव सुस्पष्टं ज्ञायते" इति सा दृढं निश्चिकाय । स्वाप्रीतिं मुखभावैरप्रकाशयन्ती तस्मिन्ननुरक्तभावनां बहिः परं जनयन्ती सती कोवलसकाशात् तां वीणामाददे । तत्प्रबोधनाय स्वयमपि अन्यासक्तेति तस्य सन्देह-जनकैः अन्यापदेशपरैः समुद्रतीरविषयकैः पद्यैः गातुं प्रावर्तत । तच्छ्रुत्वा निकटस्थो वरुणदेवः भृशं चकितोऽभवत् । तत्र सन्निहिताः सर्वेऽपि हृष्टा बभूवुः । इत्थं वीणां वादयन्त्येव सा वीणा-नादानुसारिणा रम्यकण्ठेनापि जगौ ॥ (24)

## 11. कावेरीगानम्

हे कावेरि ! ते भर्तुश्चोलभूपस्य निरङ्कुशमाज्ञाचक्रं सर्वत्र प्रवर्तयितुकामा त्वं प्रसूनवसनावृतशरीरा, मीनरूपे नयने निमील्य, क्वणद्भ्रमरशोभिकूलद्वयोपेता, मन्दं मन्दमागच्छसीत्येतत् पूर्वमेव विदितं मया । जय कावेरि ! जय कावेरि ! । (25)

हे कवेरजे ! कमनीया कुसुमवाटिका । मयूरास्तत्र मधुरं नृत्यन्ति । परभृताः हृष्टाः स्वयमेव गायन्ति । स्नानवेलायां कामिजन-कण्ठभ्रष्टाः कुसुममालाः जलेन ताड्यमाना निकटमायान्ति । रम्यं दृश्यमिदमवेक्षमाणा यत्त्वमागच्छः तत्ते पत्युः शूलपाणेः चोलराजस्य महिमानं व्यञ्जयति । विदितमेव मयाऽप्येतत् । कावेरि ! एधस्व ; पुनरेधस्व ! । (26)

हे कवेरपुत्रि ! मातेव पुत्रं देशमिमं पयसा पोषयसि । देशस्यास्य सन्मार्गप्रवर्तने अनिशं जागरूका वर्तसे । निजाज्ञाचक्रेण न्याय्येन पथा लोकान् पालयतस्ते पत्युः चोलपृथिवीपतेः कृपापात्रभूतासि । वर्धतामस्य राज्ञः समृद्धो देशः । त्वमपि नित्यं वर्धस्व ॥ (27)

## 12. पुकागानम्

(नायिकां कामयमानं सोपायनहस्तमागतं नायकं प्रति चेटयाः अधिक्षेपवचनम् —)

प्रभो ! जलधितरङ्गाः मौक्तिकान्यानीय समुद्रतीराय दत्वा तत्सकाशात् कुसुममालाः प्रतिगृह्य वस्तुविनिमयकृद्वणिगिव यथा प्रतिनिवर्तन्ते, एवं त्वमपि मौक्तिकान्युपायनत्वेन प्रदाय कुसुम-पेशलामेनां अस्मत्प्रियसखीं विनिमयक्रमेण नेतुमिच्छसि । चन्द्रबिम्ब-वदनाया अस्या रक्ताधरविलसद्रम्यश्वेतदन्ताः, त्वदुपानीतमौक्तिकैः उपमेयतां न कदापि प्राप्तुमर्हन्ति । वस्तुविनिमयकारिणा वणिजा समानं चकास्त्यस्मदीयं पुकापुरम् ॥ (28)

## 13. अपरं पुकार्गानम्

(नायिकया सङ्गम्य ततस्तां प्रतारितवन्तं नायकमुद्दिश्य चेटीवाक्यम् —)

किरातजनावासभूते समुद्रपरिसरग्रामे नायिकया रहसि प्रलोभ-वचनैः सङ्गम्य प्रतिनिवृत्ते नायके चिरमनागतवति सति तद्विरह-विषण्णायाः कृशाङ्ग्याः अस्याः करधृतवलयाः मणिबन्धनात् स्वयं स्रस्ता बभूवुः । प्रलोभवचनैः नारीजनमोहनकुशलोऽयमित्येतत् अज्ञा अबला वयं पूर्वमेव कथं जानीयाम? नायकस्य कपटवाक्यश्रवणेन अस्थाने प्रसन्नं नायिकावदनमिव, कुसुमितपुन्नागपादपमाश्रित्य प्रसूनमध्यमासीनं हंसं दृष्ट्वा "उडुगणोपेतो निशाकरः किन्नूदियाय" इति भ्रान्त्या अकाण्डे कुमुदान्यत्र प्रफुल्लान्यासन् । मधु पिपासवो द्विरेफाश्च तदध्यतिष्ठन् । एवं विचित्रदृश्योपेता पुकार्पुरी विलस-त्यस्माकम् ॥ (29)

## 14. पुकार्गानम्

(इदमपि कामुकमुद्दिश्य सखीभाषणम् —)

प्रभो! स्वपायिनो जनान् निजमदेन विजित्य तैर्यत्नेनाच्छादि-तमपि निजरूपं बहिः प्रकाश्य मद्यं यस्यां व्याधपल्ल्यां नित्यवासं करोति, तत्रत्यानामबलानां औषधादिभिरप्यशाम्यं कामरोगं जनयसि; बहिः प्रकटीकरोषि च त्वम् । तवायमेतादृशः स्वभावः अस्माकमद्यावधि अज्ञात एवाभूत् । जलधितटे विहारव्यग्राभिः अबलाभिः विरचितेषु वालुकागृहेषु तरङ्गाभिघातेन नाशमुपेयिवस्सु

वालुकाः करेणादाय पयोधौ निक्षिप्य तं पूरयितुमुद्यताभिः शशिवदनाभिः अश्रुपूर्णशूलायतनयनाभिः कन्यकाभिरुपेतमेधते नः पुकार्पत्तनम् ॥ (30)

## 15. "को भावः?"

(दूतीवचनम् —)

कुटिलालकशोभिते प्रियभामिनि! प्रियया सह रममाणं विचित्रबिन्दुबृन्दाङ्कितकायं कर्कटकमादौ स ददर्श। ततः प्रसूनशोभितोद्याने तिष्ठन्तीं मामप्यद्राक्षीत्। अन्ते स मूर्च्छितोऽभवत्। एवं कृतवतः पयोध्यधिपस्य तस्य अन्तराशयः क इति ममापि न ज्ञायते ॥ (31)

## 16. वियोगिनीवचनम्

हे कुसुमगुच्छ! हे हंसाः! पूर्वं तुरगवाहिना रथेन स्वयमेवागत्य स भवतां पुरतः मयि दयामकरोत्। सम्प्रति मां, तं रथं, आत्मानं, साक्षिभूतान् युष्मान् इत्येतत्सर्वमपि व्यस्मार्षीदिति मन्ये। कामं स विस्मरतान्नः। वयं तु तं न कदापि विस्मरिष्यामः (32)

हे मधुनिष्यन्दिकुमुदकुसुम! खेददायिन्यां सायंवेलायां खेदाश्रुनयनायां मयि रुदत्यां त्वं परं अतथाभूता सुखं स्वपिषि। निशि ते स्वप्नवेलायां समुद्रतीरदेशं यद्यागच्छेन्मे प्राणनाथः तद्दयया ज्ञात्वा मह्यं ब्रूहि। (33)

हे अम्बुपूर्णजलधे ! खगसमानवेगैः हयैरुपेतं स्यन्दन-मास्थाय कुत्राप्ययासीन्मे प्राणप्रियः । रथगमनचिह्नचिह्नितं मार्गं जलप्रवाहेण त्वं सर्वथा व्यनीनशः । दुर्ज्ञेयतद्गमनमार्गा वयमितः परं किं करिष्यामः । किञ्च एवं वञ्चितवता तेन सह त्वं मैत्रीं करोषि । तथा सति मदीयवेदना कथं ते विदिता भविष्यति ? (34)

"हे कामुकरथगमनमार्गविध्वंसकप्रवाह ! हे फुल्लकुसमितोद्यान ! प्रियया सह क्रीडनोद्यतहंस ! सिक्तशीतसमुद्रतीर ! नायकान्तिकमेत्य "वियोगखेदात् एतां विमोचयतु भवान्" इति युष्मास्वन्यतमेन केनापि निवेद्यताम् । (35)

हे अपाम्पते ! अस्माभिः सह क्रीडित्वा ततो रथमारुह्य कुत्रापि गतवति मम प्रिये, तद्गमनमार्गं निजपयोधारया प्रच्छाद्य तं दुर्ज्ञेयमकरोः । चिरञ्जीव जलधे ! चिरञ्जीव । इयन्तं कालं अस्माकं साह्यमनुष्ठितवता त्वया कुतोऽद्य वैपरीत्यमाचर्यते । भवतु, चिरं जीव त्वम् । (36)

## 17. "जननी यदि जानीयात् ?"

(मदनातुराया अङ्गनाया उक्तिः)—

समुद्रतीराधिपते ! मुक्तारूपं कवचं, प्रवालरूपं मेखलाभरणं च वहतस्ते तरङ्गाः नीवारसस्योपेतान् अन्तिकवर्तिनः केदारानभिव्याप्य सञ्चरन्ति । निबिडपुन्नागपादपोद्याने मकरकेतनेन मदनेन प्रयुक्ता इषवः मां हीनसौन्दर्यां व्रणकिणाङ्कितकायां

दुर्ज्ञेयाकारां चाकुर्वन् । एतदवस्थापन्नां मां मम जननी यदि पश्येत् तदा मम गतिः कीदृशी स्यात् ? (37)

सिन्धुतीरपालक ! रमणीयरक्तप्रवालात्मकाविवृतवदने पयोधिसम्भूतमुक्तारूपं स्मितं कृत्वा मत्स्यजालावकीर्णकिरातगृहाङ्गणप्रदेशं सत्वरमेत्य स्वकल्लोलमालाभिः सुखं स्पृशसि । वर्षर्तुप्रफुल्लभूर्जकुसुमाभं मे शरीरमालक्ष्य, 'केनेदं क्रूरकर्म कृतं स्यादस्याम् ?' इति विमृश्य मे जननी तत्त्वं यदि विजानीयात् तदा तस्याः समाधानं किं वक्ष्ये ? । (38)

आत्मगतां मत्स्यसम्बन्धजातां दुर्वासनां दूरीकर्तुकामैः, अत एव कुसुमवनमाविश्य भूगतविविधकुसमसम्पर्केण प्राप्तपरिमलवद्भिः तरङ्गैरुपेतस्य समुद्रतीरस्य नायक ! अनुभूयमाननानाव्यसनेषु अस्याप्यन्यतमत्वेन ततो विशिष्य विभज्य ज्ञातुमशक्यं इमं कामरोगं अनुभवतीयमेकान्ते । मदनरोगकृतानां सुज्ञेयानां कार्श्यादीनामनुपलम्भेन केनाप्यसंवेद्यमामयमिमं विमृश्य मे माता यद्यवगच्छेत् कथं समाधेयमिति न वेद्मि ॥ (39)

## 18. सायंसमयः

(मदनातुरायाः सायङ्कालवेलामसहमानायाः नायिकायाः सखीं प्रत्युक्तिः —)

फुल्लकुसुमितकेशपाशयुते हे सखि! दिवाकरः अस्तमगात् । मन्दान्धकारः समन्तात् व्याप्नोति स्म । खेदाश्रूणि नेत्रयोः

निर्गलमपतन् । अस्मद्वियोगमनुभवतः कुत्रापि वसतः प्रियनायकस्याऽऽवासभूते देशेऽस्मिन् अग्निं वमन् करवलयभ्रंशकारी सायङ्कालसमयोऽयं कथमद्यापि विजृम्भमाणो वरीवर्ति। (40)

पूर्णचन्द्रनिभानने सखि ! भानुमान् पश्चिमाब्धौ ममज्ज । नीलं तमः समन्ताद्ववृधे । अञ्जनाञ्चितानि रक्तकुसुमशोभीनि नयनानि खेदाम्बून्यमुञ्चन् । अस्माभिः वियुज्य परोक्षं स्थितवतः प्रियकामुकस्य अधिष्ठानदेशेऽप्यस्यिन् रविं ग्रसित्वा चन्द्रमुद्गमन् सायङ्कालः कथमिव सजीवो वस्तुं प्रभवेत् ॥ (41)

प्रसूनालङ्कृतकचभारभरिते ! शान्ताः खगरवाः । अन्तर्हितश्चाहस्करः । दुर्वारमदनरोगपीडितानि नेत्राणि खेदवारिपूर्णानि । मत्प्राणापहन्त्री, दारुकाठिना, चित्तक्षोभकरी चेयं सायङ्कालवेला प्राणप्रिये सजीवं तिष्ठति, देशेऽस्मिन् कथं सजीवमवस्थातुं शक्नोति ? (42)

## 19. "हृदयान्नापयाति"

(चेटीं प्रति नायिकावचनम्—)

केतकीपादपपरिवेष्टितायां पयोधिपरिसरस्थल्यां अबला वयं कदाचित् क्रीडासक्ताः आस्म । एको युवा यदृच्छया तत्रागत्य अस्मान् विस्मृतक्रीडाव्यापाराः कृत्वा अनुपदमन्तर्दधे । एवमन्तर्हितं क्रीडाविस्मरणहेतुभूतं चित्ते लब्धप्रतिष्ठं तमद्यापि वयं न विस्मरामः । (43)

कमनीयोद्यानशोभिजलधितटे पुरा कश्चिदागत्य, 'मयि दयां कुरु' इति याचमानस्तस्थौ । कुरङ्गदृष्टिसमानां मदीयां तरलदृष्टिं अद्य स नैव विस्मृतवान् स्यात् । (44)

शृङ्गाररसमनुभवत् हंसमिथुनं, तथा मां च प्रसमीक्षमाणः कामी कश्चित् पूर्वेद्युरतिष्ठत् । कायलग्नकनकवर्णचिह्नविशेषो देहमिव, स युवा क्षणमपि न नस्त्यक्तुं प्रभवति । (45)

20.

हे बक! मदावासभूतं जलधितीरदेशं मा एहि । कल्लोलपयोधिकूलनायकस्यान्तिकमेत्य मदीयां वियोगवेदनां तस्मै निवेदय । मन्निवासदेशं मा आगच्छ ॥ (46)

21. माधवी वीणां जग्राह

कोवल इव पुकार्कावेरीपराणि तान्येव गीतानि एतावता प्रयुञ्जाना माधवी, पुनरपि कुसुमपेशलाः अङ्गुलीः तन्त्रीषु बध्वा सम्प्रदायानुसारिण्या नूत्नया सरण्या वीणां वादयन्ती तदनुगुणं मृदुमधुरकण्ठेनापि सुस्वरमगायत् ॥ (47)

22. सायङ्कालोपालम्भः

हे सायंसन्ध्ये! वीणामादाय मयि वादयन्त्यां त्वमाविरभूः । त्वद्दर्शनेन नष्टचित्तायाः ममाङ्गुलयः तन्त्रीषु स्वरस्थानानि व्यत्ययेन स्पृशन्त्यः गानशास्त्रक्रमं अत्यक्रामन् । मच्चित्तापहरणशीला त्वं मत्प्राणानप्यपहृत्य सुखं जीव । (48)

हे निशामुख ! प्रियविरहविषादमनुभवन्त्यः अनाथा वयम्, पूर्वं केलिकाले तेनोक्तानि मृदुमधुरभाषणानि स्मृत्वा कथञ्चिज्जीवामः । क्षीणबलाः तथाविधाः नः किन्निमित्तं बाधसे ।

भवनमध्यगतस्य सैन्यविहीनस्य दीनस्य राज्ञः भवनप्राकारमभित आवृत्य स्थितेन हन्तुमुद्यतेन शत्रुभूपालेन सह अपि नाम किञ्चिदस्ति बान्धव्यं ते ? (49)

निशामुख ! अस्तंगते च रवौ, निद्रावशङ्गतासु प्रजासु, विषादरूपं रोगमुत्पाद्य सकलजगन्मोहनाकारेण त्वमाविरभूः । त्वदीया मोहनशक्तिः, मदनुभूयमानप्रियविरहः इतीदमुभयमपि यद्येवमेव बहुकालमनुवर्तेत, तदा मादृशानां विरहिणीनां जीवनमेव दुःशकं स्यात् । तेन लोकोऽयं शोकहतो भविष्यति । (50)

## 23. "समुद्रदेवते ! क्षमस्व"

मोहनशीलोऽयं सायंसमयः अनलं सर्वतः प्रसारयन् नः भृशमुद्वेजयति । प्रसूनामोदमेदुरे समुद्रतीरोपवने प्रियनायकेन पूर्वमुक्तानि प्रलोभवचनानि विश्वसतीभिरस्माभिः, 'प्रसन्ने नायके सायङ्कालसमयोऽयं किं कुर्यात्' इति औदासीन्यमवालम्बि ।

हे समुद्रदेवते ! असत्यजनदण्डनपरायणशीलापि त्वं कपटवक्तारमस्मत्प्रियनायकं अस्मत्कृते मा शिक्षय । कुसममृदुलौ ते पादौ प्रणम्य याचामहे । तथा मा कुरु ॥ (51)

## 24. माधवीकोवलयोर्वियोगः काव्यबीजावापश्च

कोवलस्तु माधवीगानमखिलं शुश्राव । "कामपि अचिन्तयन् समुद्रतीरगानं परमहमकरवम् । अकलङ्कहृदयं मां अन्यथा मत्वा इयं, यं कमपि युवानमन्यं मनसि कृत्वा अगासीत् । तस्मात्, इयं प्रतारणकुशला, वञ्चिका असत्यभाषिणी चेति" स दृढं मेने । किञ्च तदनुगुणं प्रियविरहानुभवकालेऽपि सन्निहितस्तस्याः । अत एव कोवलगीतमन्यथा व्याख्याय सन्देहजनकं गानं कर्तुं तस्या बुद्धिरुदियाय । अन्ते वीणावादनमेव तयोरुभयोः वियोगजनने मुख्यकारणमवर्तिष्ट । राकाचन्द्रसमाननायाः माधव्याः करेण बद्धं स्वीयं करं बलादाकृष्य प्रभातवेलायां तां परित्यज्य परिजनैरनुगम्यमानः माधवीविरहितः कोवलः एकाकी गृहमगात् ॥ (52)

## 25. माधवी गृहं ययौ

मधुनिष्यन्दिप्रसूनोपवने क्रीडासक्तचित्तानां सखीनां आनन्द-कोलाहलध्वनिः विश्रान्तोऽभवत् । माधवी, निश्चेष्टमानसा सती शकटमारुरोह । कोवलविहीनैव गृहमगात् । गत्वा च, "प्रणताखिलभूपालमण्डलोपेतः कृपाणवारणादिसमेतो यश्चोलपृथिवीपालः मालामण्डितनिजश्वेतातपत्रस्याधस्तात् चक्रवालपर्वतमपि आगतं कृत्वा पालयति स विजयताम्" इति सम्प्रदायानुगुणं स्वदेशपालं सा प्रशशंस ॥

# VIII

# वसन्तकालगाथा

## 1. दक्षिणपवनः

नीरसमृद्धिसम्पन्नो द्रविडदेशः। उत्तरस्यां दिशि वेङ्कटाद्रिं, दक्षिणस्यां दिशि कुमरिनदीं चाभिव्याप्य देशोऽयं चकास्ति। तत्र नानाहर्म्यमण्डितं मधुरानगरम्, विश्रुतं उरयूर्नगरं, कलकलरवाञ्चितं वञ्जिनगरं, उदधिकूलविभ्राजमानपुकार्नगरं इत्येतानि चत्वारि प्रधाननगराणि। मारवेलाख्यो भूपालः सर्वाणीमानि स्ववशे कृत्वा पालयति। तस्य प्रियसखः वसन्तकालः। पोदियाचलाधीशस्य अगस्त्यमुनेः आविर्भूतो मलयानिलाख्यो दूतः वसन्तकालमागतं कोकिलाय निवेदयति। निबिडलतासनाथोद्याने स्थितः अनङ्ग-सैन्यान्तर्गतः पिकः अङ्गनाः समीक्ष्य, "मकरकेतनस्य मदनस्य सेनाकल्पाः भवत्यः स्वलङ्कृताः सत्यः सज्जास्तिष्ठन्तु" इतीमां मलया-निलाज्ञां बोधयन्निव चुकूज॥

## 2. प्रासादतले माधवी

व्योमव्याप्युन्नतं प्रासादतलम्। तत्र निदाघकालवासार्हः ज्योत्स्नाधवलितः कश्चित्प्रदेशः। पूर्वं उदधिकूले फुल्लकुसुमितोद्याने क्रीडासमये कोवलेन वियुज्य गेहमागता नीलप्रसूनायतेक्षणा माधवी, पिकसन्देशप्रेरिता स्वयमप्यात्मानमलङ्कृतवती देशमेनमाजगाम।

घर्मकाले शैत्यमभिलषद्भिः सर्वैरपि दक्षिणपयोधिजातमौक्तिकं, मलयाचलचन्दनमित्येतदुभयमपि विशिष्य आद्रियत इति सार्वजनीनमेतत् । तथैव माधवी परिजनोपनीयमानं निर्दुष्टं तदुभयमपि निजविपुलकुङ्कुमाङ्कितवक्षसि तत्सहृदयाय उपहारत्वेन अयच्छत् । ततः नवासनेष्वन्यतममाद्यं च पद्मासनमाश्रित्य सा उपाविशत् । मञ्जुनादां वीणां पाणिना परिगृह्य मधुरं गातुमारब्धायास्तस्या गीतं मोहवशात् अन्ते शोकगीतात्मना परिणतमभूत् ॥

## 3. मोहपरवशा माधवी

पताकामुद्रोपेतं निजदक्षिणकरं वीणादण्डोपरि न्यधात् । चतसृभिः वामकराङ्गुलीभिः वर्तुलमाणिं जग्राह । वादनसमये सम्भावितानां कम्पादिचतुर्विधदोषाणां निवारणे जागरूकाऽभूत् । सम्प्रदायबद्धायां षोडशतन्त्रीपिनद्धायां शकोटनाम्न्यां तस्यां वीणायां द्वितीयपञ्चमषष्ठचतुर्थतन्त्रीषु क्रमेण विद्यमानं स्वरस्थानविशेषं विमृश्याजानात् । एवं माधवी स्वयमेव तां वीणां वादनोपयुक्तनानासंस्कारोपेतां विधाय, सप्तस्वरेष्वाद्यं स्वरमाश्रितवती स्वरसाम्यमादौ परीक्ष्य शुश्राव । चतुर्विधगानमपि प्रत्येकं उच्चनीचमध्यमस्थायिषु साऽकरोत् । ततः तदवान्तरभेदप्रदर्शनार्थमुद्युक्तायां च तस्यां मोहवशेन तद्गीतं विषमस्वरान्वितमभूत् ॥

## 4. कोवलाय माधवीसन्देशः

सुगन्धिकुसमशरैः केवलं जगदखिलं विजित्य तदप्रतिद्वन्द्वं असहाय एव पालयन् विराजते मदनः । तदाज्ञा च सर्वत्राप्रति-

हंसगतिः, साञ्जलिबन्धं सर्वजनवन्दनीया च । तथाभूतेन मदनेन प्रेरिता माधवी अनङ्गाज्ञारूपं सन्देशं कोवलाय प्रेषयितुममन्यत ।

चम्पक माधवी तमाल मल्लिका हरितपत्र रक्तोत्पलोशीराद्यनन्तकुसुममेदुरा, अत एव विभिन्नपरिमलान्विता माधवीकरगता एका प्रसूनमाला । तन्मध्यग्रथिते सितकेतकीदले अलक्तकरसरूषितया मल्लिकाकलिकाख्यलेखन्या इत्थं सा सन्देशं लेखितुमारेभे:— "सकललोकवर्तिनो जीवगणान् निजप्रियाभिः मेलयित्वा मिलितानां तेषामानन्ददायकः युवराजकल्पो वसन्तकालः सम्प्रति सन्निहितः ।

सायंसमयरूपवारणमस्तकमधिरूढ इव निशाकरः प्रादुर्भूतो दृश्यते । "प्रणयकलहेन क्षणविरहमनुभवतां, तथा दूरदेशगमनप्रयुक्तदीर्घविरहभाजां च कामिजनानां प्राणान् कुसुमशरैः पीत्वा तुष्यति दुर्जनोऽयं कुसुमबाणः" इतीदं लोकविश्रुतं, न कस्याप्यविदितपूर्वम् । भवन्तोऽपि सम्यग्जानन्त्येव ।

चतुष्षष्टिकलापुञ्जेनेव स्थितेन, सङ्गीतसाहित्यमयेन, निरर्गलकामोद्रेकप्रेरितेन, अव्यक्तरमणीयवचसा पुनः पुनः किमपि कथयन्त्येव माधवी पत्रं व्यलिखत् ।

शोकमूलभूतायां सायंवेलायां स्वर्णवर्णाकृतिः सा निकटवर्तिनीं वसन्तमालिकानाम्नीं प्रियचेटीमाहूय, "पुष्पमालामध्यगतस्य पत्रस्यास्य निष्कृष्टार्थं कोवलाय सुविशदं निवेद्य तमत्रानय" इति तामादिदेश ॥

## 5. कोवलेन सन्देशनिराकरणम्

रुधिररूषितशूलायतनयना वसन्तमालिका माधवीसकाशात् पत्रमिदमगृह्णात् । पुकार्पुरमेत्य आपणवीथ्यां कोवलं उपगता तस्मै इदमयच्छत् ।

"ललाटे तिलकं, तदुपरि अलकभारः, मध्ये दीर्घश्यामचापायमानौ भ्रुवौ, पार्श्वयोः नीलोत्पलकल्पे नेत्रे । तदधः अरुणबिम्बफलाधरोष्ठौ । इत्थं सुन्दरवदना माधवी साकूतं पश्यन्ती मय्यनुरक्तेव पूर्वं मत्समक्षमाविर्भूय कपटनाट्यमकरोत् ।

कुन्तलरूपमेघभारवहनश्रमेण किरणानुद्गमता मुखचन्द्रेण, इतस्ततः सञ्चरद्भ्यां नयनमीनाभ्यां च समन्विता रम्यमधुरप्रवालवदनं व्यावृत्य लसन्मुक्तामयस्मितश्वेतदन्तान् प्रदर्शयन्ती, "इत एहि, याहि" इति मां प्रेरयन्ती च माधवी विस्तृतनीलवीक्षणैः यत्पूर्वं कपटप्रेमाभिनयमकरोत् तत्तदानीमेवाहमद्राक्षम् ।

तदानीं सायं समयः । मया वियुज्य शोकसंविग्नमानसा साऽवर्तत । परोक्षे तुल्यावस्थापन्नं मां सा अजानात् । सद्यः स्वीयं स्वाभाविकं शुकभाषितं, हंसगमनं, मयूरनिभदेहकान्तिं च निगूह्य निशितशूलेक्षणायाः कस्याश्चित् दूत्याः भूमिकां पर्यग्रहीत् । तदनु मन्निकटमागत्य मिथ्याप्रीतिं प्रादर्शयत् । न विस्मरामि तदद्यापि ।

क्वणन्नूपुरालङ्कृतौ पादौ । नदन्मेखलाविभूषितो मध्यभागः । भूषणभारवहनखेदात् शीर्णशिथिलभावं गतः तनुमध्यदेशः । एवम्भूता

माधवी विरहिणो मम चित्तक्षोभं जानती दूरत एव स्थित्वा पूर्वं प्रेमार्द्रवीक्षितेन स्निग्धेव ननर्त; न तु कायेन मां पस्पर्श । दृश्यमेतदद्यापि हृदयान्मे नापयाति ।

अग्रे अलकभारः । पश्चात् सुदीर्घग्रथिता वेणी । परितो वेष्टितानि सुगन्धिकुसुमानि । कण्ठे मुक्ताहारः । कमनीयौ कुचतटौ । रमणीयो ललाटदेशः । उपरि स्थितानां एषां भारवस्तूनां धारणेन कृशीभूतोऽस्याः मध्यदेशः । इत्थं सर्वाङ्गलक्षणसम्पन्ना कमनीयगात्री माधवी बहिर्द्वारदेश एव तिष्ठन्ती मह्यं दूतीः प्रेषयामास । ताश्च मद्वार्तां तस्यै गत्वा न्यवेदयन् । शृङ्गाररसपुष्टं नानाभावगर्भितं श्लिष्टं मद्वचनमन्यथा व्याख्याय कुपिता सती, प्रतिनिवर्तमानेव पूर्वं मिथ्यावेषपरिग्रहपूर्वकमभिनीतवती । तदहं सम्यग्वेद्मि ।

विप्रयुक्ते मयि खिन्नहृदया सा निजविरहतापं मदीयबन्धुजनसमक्षं पुनः पुनर्ब्रुवाणा पुरा यत्प्रेमाभिनयमकरोत्, भृङ्गानुविद्धप्रसूनमण्डितकेशपाशा सा सायं काममोहिता सती समेषां पुरतः वियोगदुःखं कथयन्ती यच्च स्नेहाभासं प्रदर्शितवती तदुभयमप्यहं जाने ।

तस्मात् हे वसन्तमालिके! पूर्वं कपटभूमिकापरिग्रहेण कृतोऽयमष्टविधाभिनयोऽपि वेश्याकुलोत्पन्नायास्तस्याः कुलक्रमागतः स्वाभाविकश्च । अतोऽत्र नूतनतां कामपि न विभावये" इति कोवलः माधवीसन्देशं निराकरोत् ॥

